कर्क्यन्तवृश्चिका विप्रा राजा सिह्मधनुस्तुलाः ।
वृषकन्याघटावैश्या अन्ये शेषास्तथैव च ।। ३१९ ।।

वर्णश्रेष्ठा तु या नारी वर्णहीनस्तु यः पुमान् ।
वर्णश्रेष्ठां वर्णहीनो विवाहं नैव कारयेत् ।। ३२० ।।

**मूलादिनक्षत्रदोषः**

मूलव्यालेन्दुशूर्पेषु पुरुषर्क्षं भवेच्छुभम् ।
न दोषकृत् विवाहेषु स्त्रीणां सर्वत्र दोषकृत् ।। ३२१ ।।

मूलादौ श्वशुरं हन्ति व्यालादौ च तदङ्गनाम् ।
ज्येष्ठादौ ज्येष्ठजं हन्ति विशाखान्ते च देवरम् ।। ३२२ ।।

**दशविध घटनाफलम्**

दिनादायुष्यमारोग्यं शोभनं गणेमेव च । (गणतो भवेत्)
माहेन्द्रात्पुत्रवृद्धिः स्यात् स्त्रीदीर्घात्सर्वसम्पदः ।। ३२३ ।।

योनितो दम्पतिस्नेहः राशिना वंशवर्धनम् ।
सन्तानं राशिनाथेन वश्यादन्योन्यवश्यकम् ।।
रज्ज्वा माङ्गल्यवृद्धिः स्यात् वेधया शोकनाशनम् ।। ३२४

**चन्द्राष्टमम्**

जन्मराश्यष्टमं प्राप्ते चन्द्रे चन्द्राष्टमं स्मृतम् ।
तस्माद् वर्ज्यं सदा नृणां सर्वदा सर्वकर्मसु ।। ३२५ ।।

**चन्द्रताराबलवत्कालः**

कृष्णे बलवती तारा शुक्ले तु बलवान् शशी ।।
चन्द्रताराबले प्राप्ते सर्वकर्माणि कारयेत् ।। ३२६ ।।

**पक्षच्छिद्राः (तिथयः)**

युग्माश्च तिथयः सर्वे अजधर्मतिथी विना ।।
पक्षच्छिद्रेति विज्ञेयाः पक्षयोरुभयोरपि ।। २२७ ।।

**नन्दाद्यास्तिथयः**

नन्द्रा भद्रा जयाः रिक्ता पूर्णा चेति पुनः पुनः ।
शुक्ल प्रतिपदारभ्य पक्षयोरुभयोरपि ।। ३२८ ।।

**ऊर्ध्वाधस्तिर्यङ्मुखवनक्षत्राणि**

श्रोणादित्रय उत्तरत्रय विधिस्तिष्यः शिवोर्ध्वाननं
वह्नीन्द्राग्न्यहियाम्यमूल पितृपितृपूर्वाख्यं तथाऽधोमूखम् ।
तिर्यग्वक्त्रमधोऽयत् ऋक्षनवकं सर्वं च राशिक्रमात्
सूर्याधिष्ठितराश्युपक्रमतयाऽधस्तिर्यगूर्ध्वाननम् ।। ३२९ ।।

अधोमुखं विनाशाय तिर्यग्वित्तविनाशनम् ।
ऊर्ध्वाननं विशेषेण शुभदं सर्वकर्मसु ।। ३३० ।।

**अधोमुखादिषु करणीयानि**

मूलाग्नेयमघाद्विदैवभरणीसार्पाणि पूर्वत्रयम् ।
ज्योतिर्विद्भिरधोमुखं हि नवकं भानामिदं कीर्तितम् ।

वापीकूपतटाकगर्तपरिघा(खा)खातो विधिर्युज्यते
क्षेपद्यूतविलप्रवेशगणिताऽऽरम्भाश्च सिध्यन्ति च ।। ३३१ ।।

ज्येष्ठादित्यकराश्विनी मृगशिरः पौष्णानुराधा निल-
त्वाष्ट्राख्यानि वदन्ति भानि मुनयस्तिर्यङ्मुखान्येषु तु ।
अश्वेभोष्ट्रलुलायरासभवृषारम्भादिकं बन्धनं
गन्तुं यन्त्र हलायुधाभिगमनद्वाराक्षजाघट्टनम् ।। ३३२ ।।

पुष्यार्द्राश्रवणोत्तराशतभिषग् ब्राह्मश्रविष्ठाह्वया-
न्यूर्ध्वास्यानि नवोदितानि मुनिभी ऋक्षाण्यथैवैषु च ।
प्रासादध्वजहर्म्य वारणगृहप्राकारसत्तोरण-
च्छायाऽऽरामविधिर्हितो नरपतेः पट्टाभिषेकक्रिया ।।

**चरस्थिर-उपय राशयः**

चरस्थिरोभयाख्याश्च मेषाद्या राशयः क्रमात् ।
मीनादिकुम्भपर्यन्तं गर्भं द्वारं च बाह्यकम् ।
त्रीणि त्रीणि क्रमेणैव गणयेच्च पुनः पुनः ।। ३३४ ।।

**षडशीतिः**

चरस्थिरद्विदेहेषु पञ्चमं सप्तमं रवेः ।
नवमं चांशकं विद्यात् षटशीतिमुखं सुधीः ।
षडशीतिमुखे प्राप्ते षष्टिनाडीर्विवर्जयेत् ।। ३३५ ।।

**ताराबलराहित्यदोषपरिहारः**

रविर्गुरुर्वोपचयेऽथवा भृगु-
स्त्रिकोणकेन्द्रोपचयेऽथवा शशी ।

विपद्वधप्रत्यरनैधनर्क्षज-
त्रिजन्मनक्षत्रजदोषनाशः ।। ३३६ ।।

जन्मभे दशनाड्यस्तु कर्मभे सप्तनाडिकाः ।
आधानेऽष्ट विवर्ज्याः स्युः शेषाः कर्मसु शोभनाः ।। ३३७

**जन्मविपदादिविषये दानेन परिहारः**

गुळं जन्म विपच्छागः प्रत्यरे लवणं तथा ।
वधे तु स्वर्णदानं स्यात् सर्वदोषापनुत्तये ।। ३३८ ।।

**जन्मत्रये वर्जनीयम्**

जन्मत्रयं प्रतिष्ठायां अशुभं परिकीर्तितम् ।
सर्वे शुभफलं दद्युर्विपत्प्रत्यरनैधनाः ।। ३३९ ।।

**विपत्प्रत्यरादिदोषरहितानि नक्षत्राणि**

उत्तरत्रयहस्तेषु स्वाती सौम्यानुराधयोः ।
विपत्प्रत्यरदोषश्च वधदोषो न विद्यते ।। ३४० ।।

**विवाहघटनाविषये जन्मर्क्षापरिज्ञाने**

जन्म जन्म शुभं प्रोक्तं विवाहे सर्वसम्मतम् ।
विस्मृते जन्मनक्षत्रे नाम नाम प्रशस्यते ।। ३४१ ।।

**स्त्रीपुरुष नामनक्षत्रचिन्तन विषये विशेषः (विवाहे)**

वरस्य जन्मना सार्धं नाम्ना वध्वाश्च चिन्तयेत् ।
अङ्गनाजन्मऋक्षेण वरनाम्ना न कारयेत् ।। ३४२ ।।

**राजाभिषेकः (राज्यनिर्वहणाधिकारस्वीकारः)**

देवेन्द्रोत्तरपौष्णमित्रदिनकृत्प्राजेशतिष्यादिति-
श्रीनाथेषु सितार्यसौम्यशशिनां होरांशवारादिषु ।
रिक्तामन्त्यतिथिं विहाय वनितां तौलीं मृगं वृश्चिकं
कुर्याच्छुद्धियुतेऽष्टमेऽह्नि विमले राज्ञोऽभिषेकक्रियाम् ।।

**भूप्रवेशः (कृषिकर्मविषये)**

पुष्योत्तरापवनरौद्रमघानुराधा
चित्रार्यमेषु वृषवृश्चिककर्कटेषु ।
छिद्रां विहाय नवमीं कुजजीवचन्द्र-
सौम्योदयांशदिवसेषु विशेद् धरित्रीम् ।। ३४४ ।।

**कृष्यारम्भः**

पौष्णादित्योत्तरार्कासुरगुरुविधिषुज्ञार्यशुक्रेन्दुवारे
रिक्तां छिद्रां च पर्वद्वयमपि विरहय्य प्रवृद्धे शशाङ्के ।
कृष्यारम्भं विदध्यात् झषवृषमृगयुक् कर्कटेषु प्रसन्न-
स्स्नात्वा सम्पूज्य धात्रीं जलकुसुमफलैर्दोहलैर्मन्त्रपूतैः ।।

**कृष्यारम्भे कृषिकर्मणि च वर्ज्यानि कोणनक्षत्राणि**

गंगा गुणागुणागौरीं ईशाद्यर्कविमुक्तभात् ।
कोणेषु कृषिनाशाय महादिक्षु फलं भवेत् ।। ३४६ ।।

**कोणदोषापवादः**

स्वातीमैत्रं च विष्णुश्च मूला शन्यर्कपुष्यभम् ।
एतेषु सप्तऋक्षेषु कोणदोषो न विद्यते ।। ३४७ ।।

**बीजावापः**

हस्तस्वाती विरिञ्चासुर पितृमुरजिन्मित्रपौष्णार्यशूर्प
यादोनाथोत्तरासु क्रिय युवति धनुर्वृश्चिकान् भद्ररिक्ते ।
हित्वा पर्वासुरेड्यामरगुरुभृगुविद्वारलग्नांशके स्या-
दुक्तर्तौ बीजवापं मदसितमपहायाष्टमे शुद्धियुक्ते ।। ३४८ ।।

**कृषिविषये अग्निनक्षत्रम्**

सिह्मसङ्क्रान्तिमारभ्य मामला मल नाडिकाः ।
अग्निनक्षत्रमित्युक्तं सर्वबीजाङ्कुरक्षयः ।।
आकाशे चैव पाताले सर्वारम्भं विवर्जयेत् ।। ३४९ ।।

**लवनम्**

विष्णुप्रजेशयमहस्तमघाविशाखा-
शार्वेष्वरिक्ततिथिषु स्थिरभे कुलीरे ।
आचार्यसौम्यभृगुजादिदिनोदयेषु
कुर्याच्छनैश्चरबले लवनप्रवेशम् ।। ३५० ।।

**नूतनवस्त्रधारणे विशेषः**

हस्तोत्तराहयपुनर्वसु पुष्यमित्र-
चित्राद्विदैव विधिमारुतपौष्णभेषु ।

रिक्तां क्रियालिहरिचाप झषार्किभौम-
वारान् विहाय नववस्त्रमुशन्ति धार्यम् ।। ३५१ ।।

**नववस्त्रधारणे वारफलम्**

आदित्ये रोगवृद्धिः स्यात् चन्द्रे दुःखं जलाप्लुतम् ।
भौमे तु दह्यते वस्त्रं बुधे धान्यर्थसम्पदः ।। ३५२ ।।

गुरौ चारोग्यवृद्धिः स्यात् शुक्रे मृष्टान्नभोजनम् ।
मन्दे महद्भयं विद्यात् वस्त्रे वारफलं विदुः ।। ३५३ ।।

**नूतनवस्त्राभरणधारणादि विषये**

पुष्य प्रजेशवसुहस्तविशाखचित्रा-
मैत्रोत्तराणि पवनादिति वाजि पौष्णाः ।
एते चतुर्दश नवाम्बरधारणेष्टाः
कांस्यादिभोजनमथाङ्गविभूषणानाम् ।। ३५४ ।।

रोहिण्यश्वशशाङ्कपौष्णदिनकृत्त्वाष्ट्रार्य मित्रेषु वि-
द्वागीशेन्द्रसितासितांशदिवसे नन्दासु पूर्णासु च ।
कन्या गो मिथुनान्त्यचापभवने धार्यं भवेद्भूषणं
कन्यायाः करसङ्गमोक्तसमये चक्रङ्कुरालङ्कृतिः ।।

**औषधसेवनयोग्यदिनानि**

मार्ताण्डाश्विसमीरमित्रवरुणादित्योत्तरारेवती-
चित्राविष्णुशशाङ्कतिष्यवसुषु प्राजेशभे भेषजम् ।

कुर्यादर्कबुधार्यशुक्रशशभृद्वारोदये मङ्गलै
रिक्तायां चरभेऽङ्गनाशमुदये शुद्धेऽरिदाराष्टमे ।। ३५६ ।।

**अग्नि(विद्युत्) शस्त्रप्रयुक्तवैद्यविषये**

रौद्रेन्द्रोरगमूलभेषु दिनकृत्पुत्रारवारोदये
रिक्तायां क्रियकर्कितौलिवनितालग्ने विशुद्धेऽष्टमे ।
क्रूरेषु प्रबलेषु कर्तुरनुकूलर्क्षेषु काले द्विजैः
कृत्वाशीर्विदधीतशस्त्रहुतभुक् क्षारादियोगं बुधैः ।।

**वास्तुकर्मविधिः**

अजवृषमिथिनान्त्यनक्रसंस्थे
दिवसकरे निगदन्ति वास्तुकर्म ।
हरितुलधरकीटकेऽपि केचित्
सुरसचिवे भृगुजे च दृश्यमाने ।। ३५८ ।।

आदित्यम्बुनिधिप्रजेशशशभृच्चित्रा श्रविष्ठामघा-
मित्रार्कोत्तर रेवतीहयमरुत्तिष्येन्द्रवैकुण्ठभे ।
रिक्तां पञ्चदशीं विहाय गुरुविच्छुक्रांशवारोदये
मन्देन्द्वोर्दिवसे सुरालयगृहग्रामादि कर्मारभेत् ।। ३५९

**गृहारम्भः**

तिस्रश्चोत्तरतारका मृगशिरो रोहिण्यनूराधकं
तिष्यं रेवति हस्तभं च नवकं श्रेष्ठं गृहारम्भणे ।

स्वातीश्रोणपुनर्वसूशतभिषक् चित्रा श्रविष्ठा च षट्
मध्यान्येव तु शेषितं च सकलं निन्द्यं मुनीन्द्रा जगुः ।।

कुम्भमीनयमकर्किकन्यका
कर्मुकेषु सहिते यदा रवौ ।
वास्तुकर्म च गृहप्रवेशनं
यः करोति स तु भिक्षुको भवेत् ।। ३६१ ।।

अनिमिषयमकन्या कार्मुकेषु स्थितेऽर्के
सकलमपि च (न) कुर्यात् मान्दिरं कर्म विद्वान् ।
यदि विधिमनवेक्ष्य स्वेच्छया कर्म कुर्वन्
व्रजति यमपुरं वा दारनाशो भवेद्वा ।। ३६२ ।।

**गृहप्रवेशः**

मघामृगशिरोहस्तस्वातीमूलाऽनुराधयोः ।
रेवती रोहिणी चैव उत्तराणि त्रयस्तथा ।। ३६३ ।।

आवाहने विवाहे च गृहग्रामप्रवेशने ।
वापयेत् सर्वबीजानि स्थापयेद्गृहमण्टपम् ।। ३६४ ।।

हस्तं पुष्यपुनर्वसू शतभिषक् स्वाती तथा रोहिणी
रेवत्युत्तरभत्रयं हरिमृगेमूलं धनिष्ठाश्विनी ।
कन्याकुम्भवृषालिसिह्ममिथुने नक्षत्रराश्युत्तमा
वारे जीवशनिज्ञसोमभृगुजे वेश्मप्रवेशे सुखम् ।। ३६५

**गृहप्रवेशानर्हगृहाः**

अकवाटमनाच्छाद्यमदत्तबलिभोजनम् ।
गृहं विशान्ति पैशाचा विपदामाकरं भवेत् ।। ३६६ ।।

कवाटहीने बलिदानहीने
नाच्छादितेऽसंस्कृतभूमिकुड्ये ।
पूर्वं गृहे न प्रविशेच्छुभार्थी
दारात्मजात्मार्थविनाशनं स्यात् ।। ३६७ ।।

**वास्तुपुरुषलक्षणम्**

ऐन्द्रे शिरो भाद्रपदत्रिमासे
याम्ये शिरो मार्गशिरस्त्रिमासे ।
फाल्गुन्यमासत्रय पश्चिमे स्यात्
ज्येष्ठादिमासत्रय उत्तरे स्यात् ।। ३६८ ।।

**गृहारम्भे भूमिखननविषये नियमः**

मूर्ध्नि खाते स्वयंमृत्युः पादे स्त्रीसुतयोर्मृतिः ।
हस्ते पृष्ठे चोरपीडा कुक्षौ सर्वसमृद्धिकृत् ।। ३६९ ।।

अस्यार्थः गृहनिर्माणात्पूर्वं भूमिखनने क्रियमाणे सति वक्ष्यमाण-विषये अवधानं देयम् । वास्तुपुरुषस्य मूर्ध्नि यस्यां दिशि वास्तुपुरुषस्य शिरः वर्तते तत्र खनने सति स्वयं गृहाधिपस्य मृत्युपीडा स्यात् । पादप्रदेशे खनने सति स्त्रीपुत्रपीडा, हस्तप्रदेशे पृष्ठप्रदेशे च खनने सति चोरपीडा स्यात् । अतः मासादिकं सम्यक् परीक्ष्य वास्तुपुरुषस्य उदरभागे प्रथमं खननारम्भः कार्यः ।।

**गृहद्वारकल्पनम्**

नवभागं गृहं कुर्यात् पञ्चभागं तु दक्षिणे ।
त्रिभागं वामभागे च शेषे द्वारं विधीयते ।। ३७० ।।

**गृहनिर्मितौ अनर्हस्थलमधिकृत्य**

खन्यमाने तु दृश्यन्ते सर्पमण्डूकवृश्चिकाः ।
भस्मास्थिकाष्ठलोष्टानि तद् गृहं परिवर्जयेत् ।। ३७१ ।।

**गोशालाकल्पनम्**

सिते बुधे च रोहिण्यां सिनीवाली चतुर्दशी ।
गवां शालां न कुर्वीत प्रस्थानं च प्रवेशनम् ।। ३७२ ।।

**पूर्वशुक्रदोषः**

पृष्ठगं दक्षिणस्थं वा भृगुं कृत्वा विशेत्सदा ।
वामतः पुरतो वापि शुक्रं कृत्वा विशेन्न तु ।। ३७३ ।।

**गृहारम्भे विशेषः**

कुम्भस्थे मकरं गते दिनकरे प्राच्यां गृहारम्भणं
शस्तं दक्षिणतश्च मेषवृषभे सिह्मे कुलीरे तथा ।
वारुण्यामथ तौलि वृश्चिकगते कौबेरदिग्भागके
शेषं(शिष्टं)मासचतुष्टयं न शुभदं सर्वासु दिक्षु क्रमात् ।।

**गृहप्रवेशविषये विशेषाः**

रोहिण्युत्तरहस्ताश्विमैत्रतिष्येन्दुवैष्णवाः ।
पौष्णादित्यौ प्रजेशश्च द्वादशैते सुपूजिताः ।। ३७५ ।।

द्वितीया प्रथमा कृष्णा तृतीया पञ्चमी मता ।
दशम्येकादशी चैव सप्तमी च त्रयोदशी ।। ३७६ ।।

गुरुशुक्रबुधेन्दूनां शनेश्च दिवसोदयोः ।
अंशकाश्च सुपूज्याः स्युः प्रवेशे शुफदाः स्मृताः ।। ३७७ ।।

**धान्यसङ्ग्रहः**

रोहिण्यदितितिष्येन्दुपौष्णहस्तोत्तराणि च ।
स्वातीमूलानुराधा च याम्यार्द्रामघवैष्णवाः ।। ३७८ ।।

धान्यसङ्ग्रहणे श्रेष्ठा मन्दे बन्धुगते स्थिरे ।
पक्षछिद्रां च रिक्तां च दर्शं चैव विवर्जयेत् ।। ३७९ ।।

शेषास्तु शुभदाः प्रोक्तास्तिथयो धान्यसङ्ग्रहे ।
शकुनादीनि विष्टिं च विशेषेण विवर्जयेत् ।। ३८० ।।

**देवता-प्रतिष्ठा**

नक्रक्रियानिमिषगोमिथुनाधिरूढे
पद्माकरप्रणयिनि प्रबले शशाङ्के ।
शुद्धे नभस्यमरमन्त्रिणि देवपूज्ये
स्फीतद्युतावभिहिता त्रिदशप्रतिष्ठा ।। ३८१ ।।

तिष्यादित्यशशाङ्कपौष्ण पवन प्राजेशहस्तोत्तराः
पूज्या वैष्णवमूलमैत्रवसवः केचित्प्रतिष्ठाविधौ ।
रिक्तां छिद्रतिथिं च पर्वदिवसान् सन्त्यज्य शेषाः शुभाः
पूज्यानां गुरुचन्द्रभार्गवविदां वारांशकाः स्युः शुभाः ।। ३८२

देवानां स्थिरराशयः शुभकराः श्रेष्ठाः प्रतिष्ठाविधौ
देवानां उभयाः चराश्च कथिताः क्षुद्रप्रतिष्ठाविधौ ।
सौम्याः केन्द्रधनार्थधर्मनिरतास्त्यक्त्वा शशाङ्कं रिपौ
पापाः सोदरलाभगाश्च सकलाः शुद्धेऽष्टमे स्युः शुभाः ।।

**रोगारम्भः**

पूर्वाहीन्द्रमरुच्छिवे मरणभाक् मैत्रान्त्ययोर्दीर्घरुक्
मासात् विश्वमृगार्कशूर्पवसुभे पक्षान्मधायां नखः ।
चित्राम्भोधियमाच्युते शिवदिनं दस्राग्निमूलेग्रहै-
रादित्योत्तरपुष्यबुध्न्यविधिभे रोगी सुखी सप्तभिः ।। ३८४ ।।

उरगशतभिषार्द्रा स्वातिज्येष्ठात्रिपूर्वा
हुतवहयमतारा पापवारेण युक्ता ।
तिथिषु नवमि षष्ठी द्वादशी पर्वरिक्ता
हरिहरविधिरक्षो रोगिणां कालमृत्युः ।। ३८५ ।।

आधानजन्मनिधन प्रत्यरक्षें विपत्करे ।
नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय च ।। ३८६ ।।

**आरोग्यस्नानम्**

आदित्यरोहिणिमघोत्तरवायुपौष्ण-
तारा विहाय शशिभार्गववारवर्ज्यम् ।

रिक्ताष्टमीं पितृतिथिष्वथ रोगमुक्त-
स्नानं वदन्ति मुनयः शुभदे मुहूर्ते ।। ३८७ ।।

मृतभे व्याधिरुत्पन्ना महादुःखफला भवेत् ।
अर्धजीवे महापीडा पूर्णजीवे सुखी भवेत् ।। ३८८ ।।

**मृतादि नक्षत्राणि**

आदित्यमुक्त स्थितगम्य तारा-
तिस्रो मृतास्सप्त ततोऽर्धजीवाः ।
एकं मृतं चाष्ट सुपूर्णजीवाः
कश्चिन्मृतस्सप्त ततोऽर्ध जीवाः ।। ३८९ ।।

**तैलाभ्यङ्गविधिः**

तैलाभ्यङ्गविधिं दिवैव मुनयः शंसन्ति मन्देन्दुविद्
वारे पर्वचतुर्दशीं प्रतिपदं षष्ठ्यष्टमीं द्वादशीम् ।
ज्येष्ठां उत्तरफल्गुनीं हरिहरौ जन्मत्रयं सङ्क्रमं
हित्वा बालकवृद्धरोगिषु यथाकालं न दोषावहम् ।।

तिथिनक्षत्रवारेषु निषिद्धेष्वपि रात्रिषु ।
तैलमाज्येन संसृष्टमद्भिर्वा शुद्धिमाप्नुयात् ।। ३९१ ।।

**निषिद्धनक्षत्रेष्वपि कार्यविशेषकथनम्**

ज्येष्ठात्रिपूर्वयाम्यार्द्राः
सर्पाग्नीन्द्राग्निभं मघा ।

वर्ज्याः शुभेषु सामान्यात्
विशेषो वक्ष्यतेऽधिकः ।। ३९२ ।।

**लतावृक्षमूलादि - आवापने**

रोहिण्यहियमस्वातीमूलेष्विन्दूदये क्रमात् ।
वृक्षताम्बूलबृहतीसस्यमूलानि वापयेत् ।। ३९३ ।।

अश्विनोः पूगतारा(ला)द्याः कारवल्यादि याम्यभे ।
वन्यवृक्षास्तथाग्नेये दीर्घवृद्धिकराऽजभे ।। ३९४ ।।

महावृक्षा मृगाख्ये च अदितौ मूलवल्लयः ।
पुष्ये रम्भेक्षुमूलादिराश्लेषे नागवल्लयः ।। ३९५ ।।

**वापी-कूपादिखनने**

हस्ताद्यम्बुप पौष्ण केशवमघामित्रोत्तरा रोहिणी
देवार्येन्दुषु शुक्रसौम्यशशभृद् वागीशवारांशके ।
रिक्तां छिद्रतिथिं विहाय वृषभे नक्रे कुलीरे घटे
मीने कूपतटाककर्म मुनयः शंसन्ति शुद्धेऽष्टमे ।।

अथ वक्ष्ये विशेषेण कूपखातविनिर्णयम् ।
चतुर्लेखा लिखेत्प्राचीरुदीचीः पञ्च एव ताः ।। ३९७ ।।

एवं कृते भवेत्कोष्ठं द्वादशं परिकीर्तितम् ।
एवं कृते भवेत् तत्र कोष्ठद्वादशकं शुभम् ।।
मध्यकोष्ठद्वयं चैव ब्रह्मस्थानं तु कथ्यते ।। ३९८ ।।

पूर्वाह्णे चापराह्णे च प्रश्नलग्नादि गण्यते ।
ब्रह्मपश्चिममारम्भमैन्द्रमादि प्रदक्षिणम् ।। ३९९ ।।

मध्याह्नात्पूर्वमेवं स्यात् अपराह्णे विशेषतः ।
प्राग् ब्रह्मादिसमारभ्य पश्चिमार्ध प्रदक्षिणम् ।। ४०० ।।

यत्कोष्ठं चन्द्रसंयुक्तं अस्ति तत्र बहूदकम् ।
केन्द्रेषु पापयुक्तेषु कृच्छ्रेणापि न सिध्यति ।। ४०१ ।।

चन्द्रशुक्रयुते केन्द्रे पर्वतेऽपि जलं भवेत् ।
अर्कराशौ जलं शून्यं पाषाणश्चापि दृश्यते ।। ४०२ ।।

जलराशिगते चन्द्रे शुक्रे वापि विशेषतः ।
बहूदकं तत्र तत्र भविष्यति न संशयः ।। ४०३ ।।

**जलराशिचक्रम्**

राशिचक्रं समालिख्य क्रमान्मेषादिके फलम् ।
आरूढमुदयं चैव ज्ञात्वा सम्यग्विचक्षणः ।। ४०४ ।।

आरूढादुदयात्केन्द्रे चन्द्रशुक्रयुते यदि ।
तदा बहूदकं ब्रूयात् इति शास्त्रस्य निश्चयः ।। ४०५ ।।

**कूपखनने दिग्बलम्**

पुष्टिं भूतिं पुत्रहानिं पुरन्ध्री-
नाशं क्लेशं सम्पदं शत्रुपीडाम् ।

किञ्चित्सौख्यं दिक्षु शर्वादि कुर्यात्
कूपो मध्येगेहमर्थक्षयं च ॥ ४०६ ॥

**प्रथमार्तवकाल(नक्षत्र)फलं**

करादिपञ्चोत्तरमूलपूषा
विष्णुत्रयाश्वीज्यविधीन्दुभेषु ।
आद्यं रजः सौख्य सुतायुरर्थं
सौभाग्यसिद्धिं कुरुतेऽङ्गनानाम् ॥ ४०७ ॥

पूर्वत्रये याम्य भुजङ्गधिष्ण्या
वैधव्यमस्या विदधाति नूनम् ।
मघेशयोः शोकमथादितीन्द्रे
सा वर्धकी स्यादनले दरिद्रा ॥ ४०८ ॥

**ऋतुवारफलम्**

रोगः पतिव्रता दुःखं पुत्रिणी भोगभागिनी ।
परिप्रिया क्लेशवती सूर्यवारादिषु क्रमात् ॥ ४०९ ॥

**ऋतुतिथ्यादिदोषाः**

अमारिक्ताष्टमी षष्ठीद्वादशीप्रतिपत्स्वपि ।
परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ॥ ४१० ॥
सन्ध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्तवे ॥

**ऋतुलग्नफलम्**

मेषे तु व्यभिचारी स्यात् वृषभे तु पतिव्रता ॥ ४११ ॥

मिथुने सर्वसम्पत्स्यात् कर्कटे भ्रष्टचारिणी ।
सिंह्मे तु पुत्रलाभः स्यात् कन्यायां श्रीमती भवेत् ।। ४१२

तौल्यां विचक्षणा चैव वृश्चिके परदारिका ।
दुश्चरित्रा धनुः पूर्वे त्वपरे तु पतिव्रता ।। ४१३ ।।

मकरे मानहीना स्यात् कुम्भे धान्यवती भवेत् ।
मीने पतिप्रिया चैव पुष्पवत्याः फलं विदुः ।। ४१४ ।।

**ऋतुवस्त्रफलम्**

सुभगा श्वेतवस्त्रा स्यात् तथैव नववस्त्रिणी ।
रोगिणी रक्तवस्त्रा स्यात् विधवा नीलवासिनी ।। ४१५ ।।

भोगिनी पीतवस्त्रा स्यात् श्यामवस्त्रा पतिव्रता ।
दुर्भगा जीर्णवस्त्रा स्यात् पुष्पवत्याः फलविदुः ।। ४१६ ।।

पट्टवस्त्रा पतिस्निग्धा चित्रवस्त्रा विचक्षणा ।
हारिद्रवस्त्रा सुगुणा दुःखिता मलिनाम्बरा ।। ४१७ ।।

**ऋतुस्थानफलम्**

देवस्थाने जलस्थाने गवां स्थानेऽन्यवेश्मनि ।
अशुभं पुष्पकाले तु मार्गे चण्डालगामिनी ।। ४१८ ।।

**ऋतुफलपृच्छकस्थितदिक्फलम्**

प्राच्यां पञ्च लभेत् पुत्रान् श्वेतवस्त्रा रजस्वला ।। ४१९ ।।

अग्निकोणे पुत्रमेकं नीलवस्त्रा रजस्वला ।
याम्यदिश्यष्टपुत्रा स्यात् वस्त्रं नूतनमेव च ।। ४२० ।।

नैऋत्यां मलिनं वस्त्रं नारी वन्ध्या भविष्यति ।
वारुणे षट्सुता वस्त्रं श्वेतं नारी पतिव्रता ।। ४२१ ।।

वायव्ये श्वेतवस्त्रा स्यात् सपत्नी स्यान्न संशयः ।
उत्तरे दशपुत्रा स्यात् जीर्णवस्त्रा न संशयः ।। ४२२ ।।

ऐशे चैकादशसुतांश्छिद्रवस्त्रं तथैव च ।

**ऋतुदर्शनफलम्**

रजो दर्शनकाले तु दर्शने स्वेन दुःखिता ।। ४२३ ।।

सुमङ्गलीदर्शने स्यान्माङ्गल्यायुष्यवृद्धिकृत् ।
विधवादर्खने चैव वैधव्यं भवति ध्रुवम् ।। ४२४ ।।

दासीदर्शनमात्रेण सम्पदायुष्यवर्धनम् ।
कन्यादर्शनमात्रेण भोगभाग्यसमृद्धिकृत् ।। ४२५ ।।

पुंसा सन्दर्शने चैव दारिद्र्यं भवति ध्रुवम् ।
भोजने दुःखमाप्नोति शयने पतिमारणम् ।। ४२६ ।।

**ऋतुलग्नात्सप्तमस्थानफलम्**

मन्दारजीवबुधराहुरवीन्दुशुक्राः
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।

वैधव्यबन्धनधनक्षयपुत्रहानि-
दारिद्र्यदुःखमरणानि यथा क्रमेण ।। ४२७ ।।

जामित्रं ग्रहसंयुक्तं अशुभं सर्वदा भवेत् ।
ग्रहहीने सुखारोग्यं पुत्रलाभोऽर्थदायकः ।। ४२८ ।।

**विषमासमलमासलक्षणम्**

न यत्र पूर्णिमामास्ति पूर्णिमाद्वयमेव वा ।
नाम्ना विषमलौ तौ तु शुभकर्माणि वर्जयेत् ।। ४२९ ।।

**संस्पर्शमासः अंहस्पतिमासश्च**

यस्मिन् मासि न सङ्क्रान्तिः
सङ्क्रान्तिद्वयमेव वा ।
संस्पर्शाम्हस्पती मासौ
शुभकर्मसु निन्दितौ ।। ४३० ।।

**अस्यापवादः**

चापमीनकुलीरेषु जीवे कन्दलितत्विषि
न संस्पर्शादयो दोषा शुभकर्माणि कारयेत् ।। ४३१ ।।

बृहस्पतौ स्ववर्गस्थे स्वोच्चमित्रगते रवौ ।
न संस्पर्शादयो दोषा अधिमासाश्च शोभनाः ।। ४३२ ।।

यदा रविः शुभांशस्थः शुभग्रहनिरीक्षितः ।
मासदोषा लयं यान्ति यथा रामेण राक्षसाः ।। ४३३ ।।

**यात्राविधिः**

यात्रां विदध्यात् शुभगोचरेषु
भानौ कुलीरालिझषैर्विमुक्ते ।
यात्रां पक्षे चासिते वर्जयित्वा
रिक्तां षष्ठीमष्टमीं द्वादशीं च ।। ४३४ ।।

नन्दाभद्रा जैत्रपूर्णा विशुद्धाः
शस्ताः स्युः प्रागादिदिक्षु क्रमेण ।
हस्ततिष्याश्वयुङ्मैत्र श्रविष्ठा पौष्णवैष्णवाः ।
मृगशीर्षं तथा चाष्टौ यात्रायां तु शुभावहाः ।। ४३५ ।।

रोहिण्यदितिमूलानि वरुणत्वाष्ट्रमुत्तराः ।
एतेऽष्टौ मध्यमाः प्रोक्ता यात्रायां तु विचक्षणैः ।। ४३६ ।।

रौद्रं याम्यं च यात्रायां विशेषेण विवर्जयेत् ।
त्रीणि पूर्वा मघा ज्येष्ठा भरणी जन्मकृत्तिका ।। ४३७ ।।

स्वातीसर्पविशाखार्द्रा चित्रा गमनवर्जिताः ।
सौम्यशुक्रार्यमन्देन्दुवारवर्गोदयाः शुभाः ।। ४३८ ।।

मृगाश्विनीपुष्यपुनर्वसू च
हस्तानुराधा श्रवणं च मूलम् ।

धनिष्ठरेवत्यदिने प्रयाणे
फलं लभेच्छीघ्रनिवर्तनं स्यात् ।। ४३९ ।।

**यात्रा(प्रयाण)लग्नफलम्**

चापे शत्रुजयं वृषे तु शुभदं कन्या ज्वरं कर्कटे
भूलाभं मृगराट् पतीन्द्रियसुखं देहे व्रणं वृश्चिके ।
मृत्युर्मेषयमौ तुला तु विजयं कारागृहं नक्रराट्
मीने वृष्टिभयं ददाति सततं कुम्भे प्रहारस्तथा ।। ४४० ।।

केन्द्रत्रिकोणेषु शुभास्थितेषु
पापेषु केन्द्राष्टमवर्जितेषु ।
सर्वार्थसिद्धिं प्रवदन्नराणां
विपर्यये सिद्धिविपर्ययः स्यात् ।। ४४१ ।।

लग्नार्थभ्रातृगोहाष्टमरिपुसुतकर्मायधर्मान्त्यगास्ते
सौम्याः सौख्यानि कुर्युः दितिसुतसचिवः सप्तमस्थो विवर्ज्यः।
यात्रायां भ्रातृषष्ठागमरहितगृहाः पापिनः पापदाः स्युः
लग्ने दोषानशेषान् अपनयति महेन्द्रार्चितो भार्गवश्च ।। ४४२

**यात्राशकुनम्**

कन्या गौः पूर्णकुम्भं दधिफलकुसुमे शङ्खनादो मृदङ्गा
गोयानं विप्रयुग्मं हयगजवृषभाः क्षीरभाण्डध्वजानि ।
उत्कृष्टा पेयमृत्स्ना जलचरयुगलं वद्धमन्नं शवं वा
वेश्यास्त्रीमांसखंण्डं प्रियहितवचनं मङ्गलं प्रस्थितानाम् ।।

## अपशकुनम्

तक्रं तैलाभिषिक्तं भुजगमभिमुखं मुक्तकेशं च नग्नं
रिक्तस्त्री रिक्तकुम्भं रुधिरमभिमुखं काष्ठभारं वराहम् ।
प्रव्राजं छिन्ननासं जटिल तिलनुदं रक्तपुष्पार्द्रवस्त्रं
मत्तं च प्रस्थितानां यदि मरणभयं कार्यहानिश्च सिध्येत् ।।

स्खलनं वस्त्रभङ्गं च पतनं परिदेवनम् ।
भुजङ्गं च शशं चैव दृष्ट्वा यात्रां विवर्जयेत् ।। ४४५ ।।

आगच्छेति च तिष्ठेति चागच्छामि क्व यासि च ।
रोदनं कलहं चैव श्रुत्वा यात्रां विवर्जयेत् ।। ४४६ ।।

## यात्रायां अपशकुने सति त्यक्तव्यकालः

क्षुतमेकदिनं प्रोक्तं शकुनं तु दिनत्रयम् ।
षण्मासं सर्पमार्जारौ शशस्त्वाचन्द्रतारकम् ।। ४४७ ।।

## ग्रहस्थित्या शकुनावगमः

केन्द्रत्रिकोणेगे जीवे वायसो दक्षिणागमः ।
स चन्द्रसहितश्चेत्तु द्विजयुग्मागमो भवेत् ।। ४४८ ।।

स शुक्रसहितो यातुः नारदो दक्षिणागमः ।
स सौरिसहितो यातुः गौलिशब्दस्तु वामतः ।। ४४९ ।।

लग्नात्पञ्चाष्टमे शुक्रे गोडो भवति वामतः ।
त्रिसप्तदशमे चन्द्रे वामतो गरुडो भवेत् ।। ४५० ।।

विलग्नान्नवमे जीवे भारद्वाजश्च वामतः ।
केन्द्रत्रिकोणगे सौम्ये द्विजयुग्मागमो भवेत् ।। ४५१ ।।

स भौमसहितो यातुः मांसखण्डश्च दृश्यते ।
स राहुसहितो यातुः दीर्घपुच्छस्तु वामतः ।। ४५२ ।।

केतौ लग्नसमायुक्ते तिर्यक् सर्पो भविष्यति ।
स शुक्रसहिते जीवे क्षीरभाण्डं च दृश्यते ।। ४५३ ।।

तद्ग्रहा विपरीताश्चेत् तद्यात्रा च विपर्ययः ।
एक द्विज समालोके मृत्युस्तन्मुखमास्थितः ।। ४५४ ।।

द्वयोः सन्द्रर्शने प्राप्ते कार्यसिद्धिर्न संशयः ।। ४५५ ।।

**स्त्रीयात्रा**

कुलीर कन्या घटसंस्थितं रविं
सितज्ञवारौ प्रथमां तथोत्तराः ।
विहाय यात्रा वनितासु शस्यते
विशेष एषोऽन्यदशेषमुक्तवत् ।। ४५६ ।।

केन्द्रत्रिकोणेषु शुभस्थितेषु
शुभानि दद्युः शकुनानि नित्यम् ।
राहुश्च केतुश्च कुजश्च मन्दो
मार्जार सर्पक्षुतमामनान्ति ।। ४५७ ।।

**गोयात्रा**

देवेन्द्राश्विमघा शशाङ्कहुतभुक् पूर्वोत्तरा रेवती
नीरेशश्रवणद्विदैवतयमप्राजेशभेषूच्यते ।

गोयात्रा शशिमन्दयोस्तु दिवसे शुद्धेऽष्टमे गोधनु-
युग्माद्यन्त मृगेषु चान्यदखिलं तद्वत् विचिन्त्यं बुधैः ।। ४५८

**जलयात्रा**

नारायणार्कमृगशीर्षभ मित्रवायु
पौष्णाश्वयुग्वसुषुकालबलं विलोक्य ।
यात्रा जलेषु वणिजामभिधीयतेऽन्य-
त्सर्वं प्रयाणविधिनैव विचिन्तनीयम् ।। ४५९ ।।

**परस्थानम्**

अनूराधे प्रयातस्य ज्येष्ठायां उषितस्य च ।
पुनर्मूले प्रयातस्य कार्यसिद्धिर्न संशयः ।। ४६० ।।

यात्रां कुर्याच्छुभे लग्ने निर्गमं वापि कारयेत् ।
स्वोपयुक्तानि वस्तूनि गमयित्वाऽनुगः शुभम् ।। ४६१ ।।

हस्तोत्तराश्विवसु विष्णु सुरेन्द्रपौष्ण-
चित्राजमित्रशशिभेषु तिथावरिक्ते ।
राशौ स्थिरे विधुपुरन्दरपूज्य सौम्य-
शुक्रोदयांश दिवसेषु नृपः प्रयायात् ।। ४६२ ।।

**राजयात्रा**

आर्द्राग्नेयमघासुरेन्द्रभरणी पूर्वाम्बुनाथोरग-
स्वातीत्वाष्ट्रहयेषुकृष्णविजयारिक्तासु विष्ट्यामपि ।

माहेशामर पूज्यमन्ददिनकृद्वारर्क्षलग्नांशके
यः कुर्यात् समरं स जैत्रविभवः स्याद्वीर्यकामश्चिरम् ।।

**प्रत्यागमनकालज्ञानाय**

लग्नेऽर्कचन्द्रभुक्तैर्होराभागांशकैर्यथासङ्ख्यम् ।
वर्षं मासं दिवसान् प्रत्यागमने वदेत्कालम् ।। ४६४ ।।

जीवेन्दुशुक्रा यदि केन्द्रसंस्थाः
स्वक्षेत्रसंस्था यदि मित्रदृष्टाः ।
कुर्युर्निवृत्तिं त्वथ सद्य एव
मासार्धमासाष्टदिनैश्च सिद्धिम् ।। ४६५ ।।

पापास्त्रिकोणाय सुहृन्निरीक्षिताः
क्रमान्नवाष्टौ दशवासरेषु ।
प्रयाणयातुर्वद कार्यसिद्धिं
सुमित्रलाभो यदि वायगेऽर्के ।। ४६६ ।।

**वक्रनीचग्रहफलम्**

मासार्धं वक्रिणो दद्युः भुग्ना विंशतिवासरम् ।
रिपुस्था मासमात्रेण नीचस्था अष्टवासरम् ।। ४६७ ।।

स्ववारे वा स्वहोरायां स्वांशके वास्तगामिनः ।
शुभं कुर्युः प्रतिगमं विपरीते विपर्ययः ।। ४६८ ।।

लग्नात्सप्तमगश्चन्द्रः शुक्रो यदि बलान्वितः ।
मध्ये वा लाभदो नृणां भूयोगमनदायिनौ ।। ४६९ ।।

सौम्याः केन्द्रधनायपुत्रसहिताः पापास्त्रिषष्ठायगाः
सौम्याः स्वोच्चसुहृद्‌गृहैकनिलया यातुर्धनायप्रदाः ।
क्षिप्रं याति समागमिष्यति गृहं शत्रून् जयेत्सङ्गरे
मासाभ्यन्तर एव भृत्यसहितः सर्वाभिवन्द्यो भवेत् ।। ४७० ।।

अवक्रगौ सौम्यशनी प्रयातुः
केन्द्रस्थितौ मित्रनिरीक्षितौ वा ।
क्षेमश्चलाभश्च सुमार्गयात्रा
भवेत् प्रवेशः पुनरेकविंशे ।। ४७१ ।।

गुरुशुक्रौ केन्द्रगतौ
प्रयाणलग्नऽऽस्थितावेवम् ।
चन्द्रे वा प्राप्यफलं
दशमदिने च प्रवेशः स्यात् ।। ४७२ ।।

**सात्विक-राजस-तामसवेलाः**

सत्ववेला गुरौ चन्द्रे भौमे शुक्रे रजस्तथा ।
अर्कार्किसौम्यवाराणां तमोवेला चतुर्घटी ।। ४७३ ।।

**अस्य फलम्**

सत्वे धनुषिकुलीरे शफरे युवतौ च यायिनां मरणम् ।
वृषतौलीवृश्चिकाद्या राजसयुक्ते च यायिनां मरणम् ।।
युग्म घटसिह्ममकरे तामसयुक्ते च यायिनां मरणम् ।।

### होरा

मन्त्रिमङ्गलमार्ताण्ड शुक्रज्ञेन्दुशनैश्चराः ।
वारेशात् पञ्चमं पूर्वं षष्ठं षष्ठं पुनः पुनः ।। ४७५ ।।

अर्थलाभश्च युद्धं च मरणं शोभनं तथा ।
प्रमोद सौख्य कलहाः क्रमाद्धोराफलं भवेत् ।। ४७६ ।।

### गुलिकः

रविसामवेद शशितत्त्वसौख्य
कुजशूलशेष बुधवार मुख्या ।
गुरुलोकजीवहितरक्तालाभ
शनिपातचारुगुयमर्थकालः ।। ४७७ ।।

### गुळिके करणीयकर्माणि

धान्यसङ्ग्रहमभ्यङ्गं लवनं क्रयविक्रयम् ।
नयनोन्मीलनं गृह्यं भूषणं ऋणमोचनम् ।। ४७८ ।।

अग्न्याधानं प्रवेशं च गन्धलेपनभैषजम् ।
गजाश्वरोहणं मन्त्रस्वीकारं चाभिषेचनम् ।। ४७९ ।।

अभिचारं महादानं वेदारम्भं विशेषतः ।
विंशत्कर्माचरेद्विद्वान् विशेषाद्गुलिकोदये ।। ४८० ।।

स्थाप्ये समाप्ये क्रतुभिश्च यूपैः
वेश्मप्रवेशे गजवाजिबन्धने ।

राष्ट्रप्रवेशे लवनप्रवेशे
राजाभिषेको गुलिकोदये शुभम् ।। ४८१ ।।

**यमकण्टकम्**

यमकण्टकनामैतत्सर्वकार्यप्रणाशनम् ।
शुभार्थी सर्वकार्याणि वर्जयेत् यमकण्टके ।। ४८२ ।।

**नक्षत्रत्याज्यम् (विषघटिका)**

नीलं नैव घटः पठं नगनरं फालं नगो नाखुना
दीपं रुद्र नरोवयं घटनयं भूयान्नरो वारुणा ।
नारी नित्यनृपो जटाक्षयविराट् नागौ निशा वज्रणे
आग्नेयादिषु भानुदीप्तपरतो नाड्यश्चतस्रो विषम् ।। ४८३

**विषघटिकायां वर्ज्यम्**

स्त्रीसम्भोगं भोजनं देवपूजां
तैलाभ्यङ्गं क्षौरमौञ्जीप्रयाणम् ।
अग्न्याधानं नूतनं दारुकर्म
सर्वानेतान् वर्जयेयुर्विषाख्ये ।। ४८४ ।

वीरप्राप्येशशीमाणं वीणामुनीबलोनये ।
पुत्रसेनाधनं क्षन्नं नागपत्नी फले विषम् ।। ४८५ ।।

शुक्लप्रतिपदादीनि परं नाडीचतुष्टयम् ।
विषनाड्यस्तु विज्ञेयाः पक्षयोरुभयोरपि ।। ४८६ ।।

**वारविषम्**

रवौ रागे रभौ चन्द्रे कुजे कामकविर्बुधे ।
कालो जीवे करः शुक्रे भयं सौरे घटं विषम् ।। ४८७ ।।

आदौ विषं बुधे मन्दे सोमे शुक्रे च मध्यमे ।
कुजे भानौ गुरौ चान्ते वारे विषमुदाहृतम् ।। ४८८ ।।

**त्याज्यफलम्**

आदौ कर्मविनाशः स्यात् द्वितीये कर्तृनाशनम् ।
तृतीये सर्वनाशः स्यात् चतुर्थे तु कुलक्षयः ।। ४८९ ।।

**राशिविषम्**

अजवृषभधनुः कन्यकाद्ये भुजङ्गः
झषमकरकुलीरे वृश्चिकान्ते वराहः ।
तुलमुथनघटानां सिह्ममध्ये तु गृध्रः
सकलमुनिमतं स्यात् सर्वकार्येषु नाशः ।। ४९०

**तिथिशूलम्**

प्रतिपन्नवमी पूर्वे द्वितीया दशम्युत्तरे ।
तृतीयैकादशी चाग्नौ चतुर्द्वादशि नैर्ऋते ।। ४९१ ।।

पञ्चत्रयोदशी याम्ये षट्चतुर्दशि पश्चिमे ।
सप्तमी पूर्णिमा वायौ अमावास्याष्टमीशके ।। ४९२ ।।

एतानितिथिशूलानि जीवितं तस्य तुर्लभम् ।

### वारशूलम्

न पूर्वे शनिसोमे च न गुरौ दक्षिणे तथा ।। ४९३ ।।

न पश्चाद्भानुशुक्रे च नोत्तरे बुधमङ्गले ।

### वारशूलापवादः

द्वाविंशति गुरु(रो)श्चैव द्वादशं बुधभौमयोः ।। ४९४ ।।
पञ्चदशी भृगोर्भानोः मन्देन्द्वोरष्टनाडिकाः ।
वारशूलादिदोषघ्नं शेषः कालः शुभावहः ।।

### शुभ-फलदिशाः (वारफलम्)

अङ्गारपूर्वे गमने च लाभः
सोमे शनौ दक्षिणगेऽर्थलाभः ।
बुधे गुरौ पश्चिमकार्यसिद्धिः
रवौ भृगावुत्तरधान्यलाभः ।। ४९६ ।।

### नक्षत्रशूलम्

पूर्वे ज्येष्ठाधानिष्ठाभे श्रवणाश्विनि दक्षिणे ।
पश्चिमे रोहिणीपुष्ये हस्तफल्गुनि चोत्तरे ।। ४९७ ।।

एतन्नक्षत्रशूलं तु मृत्युशोकभयावहम् ।

**नक्षत्रशूलापवादः**

कृत्तिकासु त्रयोदश्यां भरण्यां सप्तनाडिकाः ।
मघासु पूर्वत्रितय एकादश्यां तु षोडश ।। ४९८ ।।

ज्येष्ठाच्युतौ मघाश्विन्यौ विधुतिष्यौ सदा बुधः ।
हस्तोत्तराश्च प्रागादि शूलं यात्रां विवर्जयेत् ।। ४९९ ।।

उत्तरासूत्तरां गच्छेत् ब्रह्मापि न निवर्तते ।। ५०० ।।

**चन्द्रकण्टकम्**

मेषमीनादिपर्यन्तं पश्चिमादिक्रमेण तु ।
चन्द्रकण्टकमुत्याहुः गमने कार्यनाशनम् ।। ५०१ ।।
यस्मिन् राशौ स्थितश्चन्द्रस्तस्मिन् यात्रां विवर्जयेत् ।

**महाशूलम्**

प्राच्यादिष्वग्नितारायाः सप्तसप्तक्रमात् स्थिताः ।। ५०२

भग्रहाभिमुखं तत्र महाशूलमशोभनम् ।

**अटलभ्रमणम्**

सूर्यादि गण्यते चन्द्रे सप्तभिर्भागमाहरेत् ।। ५०३ ।।

द्विषष्ठे भ्रमणं विद्यात् त्रिसप्तत्यतिताडनम् ।
प्रथमं पञ्चचत्वारि अटलो ह्यतिलाभकृत् ।। ५०४ ।।

अटलं द्विघटी प्रोक्तं भ्रमणं पञ्चनाडिकाः ।
अयलभ्रमणे हित्वा शेषे गमनमुत्तमम् ।। ५०५ ।।

**यात्रापञ्कम्**

उडुतिथिदिनलग्नं पञ्चधा यत्कृतं च
तिथिरविदशनागैर्वेदसङ्ख्यायुतं च ।
नवहतशरशेषं शोभने वर्जनीयं
रुगनलनृपचोरैर्मृत्युना दूषितं च ।। ५०६ ।।

**मृतनक्षत्रम्**

आदित्यमुक्तस्थितगम्यताराः
तिस्रोमृतास्सप्तसु तेऽर्धजीवाः ।
एकं मृतं चाष्टसु पूर्वजीवाः
कश्चिन्मृतस्सप्तसु तेऽर्धजीवाः ।। ५०७ ।।

**अन्धकाणादिनक्षत्रम्**

चतुश्चतुर्द्वादश च चतुस्त्रीण्यर्कसंयुतात् ।
अन्धाः काणाः द्विनेत्राः स्युः काणाश्चान्धा यथाक्रमम् ।।

(सूर्यसंयुतात् नक्षत्रात् चत्वारि अन्धानि, चत्वारि, काणानि- ततः द्वादश द्विनेत्राणि, ततः चत्वारि अन्धानि ततः त्रीणि काणानि इति ज्ञेयम् ।।)

**द्विनेत्रकाणान्ध तिथयः**

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशीचतुर्दश्यौ द्विनेत्राः परिकीर्तिताः ।। ५०९ ।।

प्रतिपत्पञ्चदश्यौ चाप्यष्टम्येकादशी तथा ।
दशमी द्वादशी काणाः शेषान्धतिथयः स्मृताः ।। ५१० ।।

**ऊर्ध्वोदयपृष्ठोदयोभयोदयराशयः**

यमालिकुम्भसिह्मस्त्रीजूका ऊर्ध्वोदयाः स्मृताः ।
मीनश्चोभयतः प्रोक्तः शेषाः पृष्ठोदयाः स्मृताः ।। ५११ ।।

**लग्नत्याज्यविषये**

लग्नस्यादौ विषं त्यक्त्वा पश्चात्कर्माणि कारयेत् ।
तल्लग्नं वर्जयेत् धीमान् लग्नस्यान्ते विषं यदि ।। ५१२

**दिवान्ध निशान्धराशयः**

मेषश्चवृषभश्चैव सिह्मश्चैव दिवान्धकाः ।
युग्मकर्कटकन्याश्च निश्यन्धाः परिकीर्तिताः ।। ५१३ ।।

अन्धो विनाशयेत्कर्म काणश्चापि न शोभनः ।
युग्मनेत्रः शुभं कुर्यात् काणश्चापि बलान्वितः ।। ५१४ ।।

**बधिरराशयः**

तुलाच वृश्चिकश्चैव पूर्वाह्णे बधिरौ सदा ।
धनुश्च मकरश्चैव बधिरौ चापराह्णके ।। ५१५ ।।

कन्या कर्कटकश्चैव मध्याह्ने चान्धकौ स्मृतौ ।
कुम्भमीनद्वयं पङ्गु पूर्वपश्चिमसन्ध्ययोः ।।
अन्धकः कार्यनाशाय बधिरश्चार्थनाशनम् ।। ५१६ ।।

**वृष्टियोगाः**

आषाढमासे सितपक्षपञ्चमी
रव्यादिवारक्रमशः फलानि ।
अत्यल्पवृष्टिरतिवृष्टियुद्धं
वातः सुभिक्षं प्रलयश्च तापः ।। ५१७ ।।

आषाढापरपक्षस्य द्वादश्यां यदिवर्तते ।
धराधरश्च विद्युच्च महावृष्टिर्भविष्यति ।। ५१८ ।।

आषाढे पूर्वपक्षे तु नवमी स्वातिना सह ।
न वातो न च वृष्टिः स्यात् तद्राष्ट्रं परिवर्जयेत् ।। ५१९

**महावातयोगः**

शशधरसितसौम्यभौमयोगे
दिवसकरेऽन्त्यगते भवेदनल्पः ।
यदि रवितनयोऽपि सप्तमस्थः
त्रिभुवनसम्भृतसम्भ्रमो नभस्वान् ।। ५२० ।।

भृगुबुधभानुशशाङ्काः
सह स्थिताश्चापलग्नेऽपि ।
द्वादशगतेऽपि भौमे
भवति हि गिरिभञ्जनो वायुः ।। ५२१ ।।

रविशनिकुजवारे कार्तिके क्षीणचन्द्रे
यदिसितगुरुसौम्याः स्वातिमाक्रम्य धिष्ण्यम् ।

नरमृगपशुपक्षिखेचराः प्राप्नुवन्ति
मरणभयमवश्यं वायुना वारिणा वा ।। ५२२ ।।

शुक्रबुधदेवपूज्याः
सहस्थिताश्चापि वित्तगे भानौ ।
भवति जगत्सम्भ्रमणं
प्रभञ्जनेनाल्पवर्षेण ।। ५२३ ।।

**ग्रहणफलम्**

ग्रस्तौ दिनकरचन्द्रौ
यदि झषकन्यागृहस्थिते भानौ ।
एकोदका धरित्री
भवति तदा प्रबलवर्षधाराभिः ।। ५२४ ।।

**ग्रहवक्रफलम्**

शन्यङ्गारक जीवानां पञ्चमस्थो यदा रविः
तधा वक्रं विजानीयात् नवमे मार्गगामिनी ।। ५२५ ।।

एकस्मिन् वत्सरे जीवे राशित्रयमुपागते ।
भनेद्वसुन्धराकीर्णा कुणपैः सप्तकोटिभिः ।। ५२६ ।।

अतिचारे च वक्रे च तत्तद्राशिगतं फलम् ।
बृहस्पतेस्तु तन्नास्ति पूर्वराशिगतं फलम् ।। ५२७ ।.

स्वाती विशाखापितृतारकाणां
हस्तोत्तरा पौष्णभमूलभेषु ।

अङ्कारकस्तिष्ठति यावदेषु
    तावन्न वृष्टिस्सकलस्य हेतुः ।। ५२८ ।।

अङ्कारको यदा सौरिरेकतः पञ्चषष्ठयोः ।
सप्तमे च त्रिकेवापि अन्योन्यं वीक्षणं च वा ।। ५२९ ।।

खण्डवर्षं च दुर्भिक्षं प्रजानां च महद्भयम् ।
पूर्वे वा पश्चिमे वापि धूमकेतूद्भवे सति ।। ५३० ।।

पूर्वं तु राज्यनाशाय पश्चात्तुक्षेमकृद्भवेत् ।
सौम्ये याम्येऽयनेचैव धूमकेतूद्भवे सति ।। ५३१ ।।

सौम्ये तु जननाशाय याम्ये पशुविनाशनम् ।
पूर्वापरे निशायां तु दृश्यते पुच्छतारकम् ।।
मन्दं गते तु दुर्भुक्षं शीघ्रगत्या सुभिक्षकृत् ।। ५३२ ।।

यदाऽरसौरी सुरराजमन्त्रिणा
    सहैकराशौ समसप्तमेऽपि वा ।
हिमाद्रिलङ्कापुरमध्यवर्तिनीं
    त्रिभागशेषां कुरुते वसुन्धराम् ।। ५३३ ।।

मकरमिथुनसिह्मे देवमन्त्री यदास्या-
    द्वयगजवृषनाशं सस्यानाशं सद्युद्धम् ।
मरणमनलदाहं सस्यवृक्षस्य नाशं
    भवति च नृपयात्रा चोरपीडा च लोके ।। ५३४ ।।

अजे धनुर्मीनवृषालिसिंह्मे
धरासुते सूर्यसुतेन वक्रे ।
हयाश्च नागाश्च नाराश्च गोकुलं
त्रिभागशेषं कुरुते धरायाम् ।। ५३५ ।।

अजवृषतुलकुम्भे चापमीने च युग्मे
गुरुशनिकुजयुक्तं क्षाममत्यन्तदुःखम् ।
ज्वरमरणभयाद्यैर्व्याधिमृत्युप्रवासं
दहनभुवनशून्यं देशभूपालनाशम् ।। ५३६ ।।

दिनकरतनयफणीन्द्रौ
सहस्थितावेकराशिमुपगम्य ।
नरशोणितप्रसिक्तां
सकलं वसुधां क्षणेन कुर्वाते ।। ५३७ ।।

**ग्रहसंयोगे**

पञ्चग्रहसंयोगे दुर्भिक्षं भवति तथैव षण्णां च ।
नरपतिचलनं विद्यात् प्रलयं जगतां भवेत्सप्तानाम् ।। ४३८

**ग्रहमाला**

यदिभवति ग्रहमाला
तुलादिमेषादिगौडभागेषु ।
प्रलयं लोकविनाशं
नरेन्द्रनाशं करोति कालेन ।। ५३९ ।।

**आषाढपूर्णीमायां मेघावृतिः**

आषाढमासे शशिपूर्णतिथ्यां
पूर्वाह्णमध्याह्न तथा पराह्णे ।
भवेत्तु मेघैः परिवेष्टिते रवौ
तुलादिमासत्रय एव वृष्टिः ।। ५४० ।।

एकर्क्षगौ गुरुभृगुजौ
गजतुरग नरेन्द्रपीडा स्यात् ।
भवति क्षणेन सप्तसु
जगत्सु भीतिस्त्वशोभनं भविता ।। ५४१ ।।

एकस्थौ भृगुभौमौ
नरेन्द्रनाशं क्षणेन कुर्वाते ।
नद्यः प्रतीपवाहाः
कूपतटाकादिवारिविकृतिर्वा ।।
जनयति जन सङ्क्षोभं
भूमिपतीनां महद्भयं कुरुते ।। ५४२ ।।

बिम्बोद्भवं दर्शयते नराणां
गोमृत्युदुर्भिक्षमतीव वृष्टिः ।
सुभिक्षमेतत्कथितं प्रकाशे
पुष्यादिमासत्रितये बुधस्य ।। ५४३ ।।

**भूकम्पादिकम्**

निर्धातमुल्मुकखदीपनभूमिकम्प-
गान्धर्वगेहचरमाम्बरधूमकेतुः ।

वक्रानुवक्ररविमण्डलसर्वग्रास-
दुर्भिक्षरोगमहिमण्डलराजमृत्युः ।। ५४४ ।।

**इन्द्रधनुः**

इन्द्रधनुर्दृष्टिश्चेत्
रात्रौ पूर्वापरेऽथवा मध्ये ।
पूर्वे तु लोकनाशं
त्वपरे धान्यक्षयं नृपा मध्ये ।। ५४५ ।।

युगपद्वारिचापौ
दृश्येते रात्रिपश्चिमे पूर्वे ।
एकत्र वा प्रणाशं
कुरुते निःक्षत्रियां वसुधाम् ।। ५४६ ।।

वृष्टिं करोत्यवृष्टौ
वृष्टौ वृष्टिं निवारयत्यैन्द्रे ।
पश्चात्सदैव वृष्टिं
कुलिशभृतश्चापमाचष्टे ।। ५४७ ।।

चापं मघोनः कुरुते निशायां
आखण्डलायां दिशि भूपपीडाम् ।
याम्यापरोदक् पृथिवीं निहन्या-
त्सेनापतिं नायकमन्त्रिणौ च ।। ५४८ ।।

पुच्छनक्षत्रमण्डूकं श्वेतपक्षं च वायसम् ।
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ।। ५४९ ।।

दिनकरपरिवेषः पूर्वयामे नृपाणां
भयमथ परिवेषाद्भूरिवृष्टिं द्वितीये ।
पुनरपि च तृतीये मेदिनी शोणितार्द्रा
सकलभुवनपीडा स्याच्चतुर्थे तु यामे ।। ५५० ।।

**अर्धोदयमहोदयौ**

पुष्ये माघेष्वमावास्यापातश्रावणसङ्गमः ।
सोमे वा सौम्यवारे वा भवेद्यदि महोदयः ।
माघे इन्दुक्षये काल्ये अर्केवारेऽर्ध एव सः ।। ५५१ ।।

यावन्मार्ताण्डसूनोस्त्वजवृषधनुषि वृश्चिके मीनसिंह्मे
राश्यन्ते चेन्निवासः सुरवरगुरुणा भूमिपुत्रेण वापि ।
तावद् दुर्भिक्षपीडानरपतिमरणं क्षुत्पिपासोपघातं
ग्रामारण्यश्मशाने निशिचर सहितैर्नृत्यतेऽस्मिन् पिशाचैः ।।

**दुर्भिक्षवर्षलक्षणम्**

प्रातः काले तुषा वृष्टिर्मध्याह्ने मेघडम्बरम् ।
रात्रौ निर्मलमाकाशं वर्षं दुर्भिक्षलक्षणम् ।। ५५३ ।।

**वर्षलक्षणम्**

सिंह्मे भिन्ने कुतो वृष्टिरभिन्ने कर्कटे कुतः ।
कन्याभिन्ने शरा वृष्टिरितिवर्षस्य लक्षणम् ।। ५५४ ।।

**मृगशीर्षवृष्टिः**

चन्द्राद् वृष्टिर्मघात् कुम्भि स्वातौ सौदामिनी यदि ।
पञ्चाहात् पञ्चतारासु महावृष्टिर्भविष्यति ।। ५५५ ।।

अमोघा दक्षिणामेघा अमोघाः पूर्ववायवः ।
अमोघा चोत्तरा विद्युदमोघं पश्चिमं धनुः ।। ५५६ ।।

**बुधशुक्रसामीपमये वर्षः**

बुधशुक्रसमायोगः कुर्यादेकार्णवं जगत् ।
तयोर्मध्यगते भानौ समुद्रमपि शोषयेत् ।। ५५७ ।।

बुधशुक्रौ समीपस्थौ दस्रादौ सप्तविंशतिः ।
त्रिकं त्रिकं त्रिकं चैव सप्तकं नवकं द्वयम् ।। ५५८ ।।

अतिवृष्टिरनावृष्टिः सुवृष्टिः प्रलयं तथा ।
महाक्षामं सुभिक्षं च षडेते वर्षलक्षणम् ।। ५५९ ।।

पूर्वे स्वातित्रयं कुर्यात् पश्चिमे मघपञ्चके ।
भृगुः करोत्यनावृष्टिं विपरीते तु वर्षति ।। ५६० ।।

आषाढे पूर्वपक्षे तु नवम्यां स्वातिना सह ।
न वातो न च वृष्टिः स्यात् तद्राष्ट्रं परिवर्जयेत् ।। ५६१ ।।

मत्स्ये कुलीरे मकरे वृषभे तुलवृश्चिके ।
जलराशिषु जातानां महिषं सम्प्रशस्यते ।। ५६२ ।।

आदौ तु कर्षणं विद्यात् समये शुभगोचरे ।
वृषे कुलीरे कन्यायां वृश्चिके मकरे झषे ।। ५६३ ।।

सङ्क्रान्त्यां तु तुषावृष्टिर्महावृष्टिर्भविष्यति ।
अजे यमे हरौ चैव तुलायां अथ कार्मुके ।।
सङ्क्रान्त्यां तु तुषावृष्टिरनावृष्टिर्भविष्यति ।। ५६४ ।।

**गर्भस्थशिशुविषय प्रश्ने -**

नखध्रुवं गार्भिणी नामधेयं
मनुप्रयुक्तं शरसंयुतं च ।
तिथिप्रयुक्तं नवभागशेषं
समे च कान्या विषमे कुमारः ।। ५६५ ।।

**वर्षप्रश्ने**

वर्षप्रश्ने शशि(विधौ)नित्यं स्वक्षेत्रे केन्द्रगेऽपि वा ।
जलराशिगते शुक्रे बहुवृष्टिः शुभेक्षिते ।।
अल्पवृष्टिः पापदृष्ट्या प्रावृट्काले चिराद्भवेत् ।। ५६६

आर्द्राप्रवेशनं भानोर्दिवाचेत्सस्यनाशनम् ।
सन्ध्ययोः सस्यवृद्धिः स्यात् सर्वसम्पन्नृणां निशि ।। ५६७

आर्द्राप्रवेशने वृष्टिर्दिवा वा यदि वा निशि ।
अल्पवृष्टिरनर्घं च शुभं वृष्टिविवर्जितम् ।। ५६८ ।।

पूर्वाषाढगते भानौ जीमूतैः परिवेष्टिते ।
आर्द्राप्रवेशात् वर्षन्ति नक्षत्राणि त्रयोदश ।। ५६९ ।।

आसन्ने भानुशशिनोः परिवेषो यदोत्तरे ।
विद्युत्स्तनितमण्डूकस्वराः वृष्टिर्भवेत्स्थले ।। ५७० ।।

अधिके तपने चैव यस्मिन् मासि शुभं त्यजेत् ।
तस्मिन् मासि ग्रहोच्चे तु सर्वकर्माणि कारयेत् ।। ५७१ ।।

**नक्षत्रगण्डम्**

उत्तरे प्रथमे पादे पुष्ये चैव तु मध्यमे ।
पूर्वाषाढात्रिपादे च चित्रा पूर्वार्ध एव च ।।
जातस्तु पितरं हन्ति जाता चेन्मातरं ध्रुवम् ।। ५७२ ।।

आश्लेषान्तं मघात्पूर्वं ज्येष्ठान्तं मूलपूर्वकम् ।
रेवत्यश्विनि तन्मध्यं गण्डान्तमभिधीयते ।। ५७३ ।।

पूर्वाषाढे च पुष्ये च पितरं मातरं सुतम् ।
मातुलं च तथा हन्यात् प्रथमाद्यंशकाः क्रमात् ।। ५७४ ।।

पुष्यादौ च पितुर्गण्डं द्वितीयं मातृगण्डकम् ।
तृतीये धनगण्डं च चतुर्थे तु शुभावहम् ।। ५७५ ।।

पित्रोर्मृतिर्हस्तयमत्रिपादे
पितुश्च पूर्वे जलपुष्ययोश्च ।
त्वाष्ट्राद्ययोः स्यात्पितृमातृनाशः
निःसंशयं मातृवधो यमाद्ये ।। ५७६ ।।

चतुर्घटी मूल मघाश्विनादौ
गण्डान्तमर्धे च फणीन्द्रपूर्णे ।। ५७७ ।।

## जातस्य शिशोर्दीर्घायुष्यम्

लग्नाधिपो वा जीवो वा शुक्रो वा यदि केन्द्रगः ।
यस्य पुंसः स दीर्घायुर्धनवान् राजवल्लभः ।। ५७८ ।।

## लग्नादिभावगत सूर्यादिग्रहफलम्

लग्ने मातापितृसुतान् अर्केन्दुकुजकेतवः । ।। ५७९ ।।

रविसौरिकुजा घ्नन्ति द्वितीये मातरं तथा ।
बुधस्तृतीये जननीं चतुर्थे राहुरात्मजम् ।। ५८० ।।

पञ्चमेऽर्केन्दुमन्दाराः पित्रम्बासुतसोदरान् ।
षष्ठे सपापकश्चन्द्रो हन्ति पुत्रेण मातरम् ।। ८५१ ।।

सप्तमे पितरं पापो निहन्ति जननीं तथा ।
अष्टमे नवमे चैव तनयं हन्ति चन्द्रमाः ।। ५८२ ।।

पञ्चमस्थानजा दोषा दशमे वि(ऽपि)प्रकीर्तिताः ।
एकादशस्थानगताः सर्वे शुभफलप्रदाः ।।
द्वादशे रविमन्दाराः पुत्रं घ्नन्ति समातरम् ।। ५८३ ।।

## अन्धादिशिशुजनने हेतुः

दक्षिणाक्षि हरेन्मन्दो व्यये वामं कुजः शिशोः ।
राहूपस्पृष्टहोरायां जातोऽन्धः स्याद्रवौ स्मरे ।। ५८४ ।।

षष्ठेऽष्टमेऽप्यक्षिहरः चन्द्रः पापेन संयुतः ।
तथाष्टमे सूर्ययुतश्चन्द्रो दृष्टिं हरेच्छिशोः ।। ५८५ ।।

चरराशौ प्रजोत्पत्तौ पितादेशान्तरे स्थितः ।
स्थिरराशौ प्रजोत्पत्तौ पिता तस्मिन् गृहे स्थितः ।। ५८६

युग्मराशौ प्रजोत्पत्तौ ग्राममध्ये पिता स्थितः ।
चन्द्रादित्यौ यदि स्यातां समेतौ परवेश्मनि ।। ५८७ ।।

लग्नं च नेक्ष्यते ताभ्यां परजातं विनिर्दिशेत् ।
खण्डनक्षत्र संयुक्तं द्वासप्त द्वादशान्वितम् ।।
भानुभौमार्किवाराणमन्यबीजं प्रकीर्तितम् ।। ५८८ ।।

सुतमदननवान्त्यलग्नरन्ध्रे-
ष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुत शशिपुत्रदेवपूज्यै-
र्यदि बलिभिर्न युतो न लोकितो वा ।। ५८९ ।।

केन्द्रत्रिकोणसहजायधनेषु सौम्याः
पापास्त्रिषष्ठभवनेषु शुभाः प्रसूतौ ।
चन्द्रश्चषष्ठ हिबुकान्त्यकलत्रलग्न-
शेषान्यराशिशुभदो मुनयो वदन्ति ।। ५९० ।।

चन्द्राष्टमं च धरणीसुतसप्तमं च
राहुस्तथैव च शनिजन्मगुरुस्तृतीये ।

षट्कं च (षष्ठेभृगुश्च) शुक्रबुध सप्तम जन्मकेतु-
द्वादश्यभानुसुतनिश्चितकालमृत्युः ।। ५९१ ।।

लग्नादष्टमगश्चन्द्रो लग्नचन्द्रोऽथवा पुनः ।
क्रूरैर्निरीक्ष्यते चेत्स्याज्जातस्य मरणं ध्रुवम् ।। ५९२ ।।

द्वादशस्थस्तथा सोमः सूर्यस्सौरिस्तथैव च ।
मातुः पितुश्च सूनोश्च व्याधिरेव न संशयः ।। ५९३ ।।

चन्द्रस्य सप्तमस्थाने मन्दभौमौ स्थितौ यदि ।
सप्ताष्टमेषु मासेषु मार्तुर्मरणमादिशेत् ।। ५९४ ।।

रविणा दृष्टे चन्द्रे लग्ने प्रख्यात दीर्घायुः ।
पितुरधिको विख्यातः शूरः स्तब्धो रणाध्यक्षः ।। ५९५ ।।

अष्टमाधिपतौ केन्द्रे लग्नेशे बलवर्जिते ।
त्रिंशद्वर्षाणि जीवन्ति द्वात्रिंशत्परमावधिः ।। ५९६ ।।

भानुयुक्तः कुजो दृष्टः शनिना मृत्युदः पितुः ।
यावद्रवियुतो भौमः तावत्स्यान्मरणं पितुः ।। ५९७ ।।

रविश्च रविपुत्रश्च भूमिपुत्रश्च केन्द्रगः ।
दशाहं दशमासं वा दशवर्षमथापि वा ।।
गुरुणावीक्षितो नोचेत् जातस्य मरणं ध्रुवम् ।। ५९८ ।।

पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाऽहनि शुभग्रह दृश्यमानः ।

तच्चन्द्रमा रिपुगतो व्ययगोऽपि रन्ध्रे
आपत्सु रक्षति पितेव शिशुं प्रजातम् ।। ५९९ ।।

दशमे भूसुतो नेचेत् स जातं किं करिष्यति ।। ६०० ।।

अजवृषभमृगाङ्गनाकुलीरा
झषवणिजौ च दिवाकरादि तुङ्गाः ।
दशशिखि मनुयुक् तिथीन्द्रियांशैः
त्रिणवकविंशतिभिश्च भवन्ति तेऽति तुङ्गाः ।। ६०१

उच्चे रवावुग्रधनी च हन्ता
चन्द्रे सुवस्त्राभरणान्नसम्पत् ।
कुजे तु तेजस्विनि क्रूरगर्वः
बुधे कलाढ्यो निपुणः सुमेधाः ।। ६०२ ।।

विख्यातश्च महासुरेड्यसचिवे विद्वान् प्रसङ्गप्रियः
शुक्रे गीतविलासभोगनिरतः कान्तः स्मरश्रीधरः ।
मन्दे राजचमूपराजसुयशो लुब्धो लसत्कीर्तिमान्
रव्याद्युच्चफलानि जातकफले वक्ष्यन्ति धीराः सदा ।। ६०३

उच्चयुक्तेऽथ लग्ने स्यात् सर्वान् दोषान् व्यपोहति ।
द्विग्रहोच्चे तु सामन्तस्त्रिग्रहोच्चे महीपतिः ।।
चतुर्ग्रहोच्चे साम्राज्यं पञ्चोच्चे लोकनायकः ।। ६०४ ।।

**चरस्थिरोभयराशयः**

चरस्थिरोभयाः प्रोक्ता मेषाद्यास्तु पुनः पुनः ।
केन्द्रं फणभरं चापोक्लीबं लग्नात्पुनः पुनः ।। ६०५ ।।

### उपचयापचस्थानानि

त्रिषट्दशाया लग्नस्य प्रोक्ता उपचया बुधैः ।
शेषाश्च राशयस्सर्वे ख्याता अपचयाः पृथक् ।। ६०६ ।।

### केन्द्रत्रिकोणचतुरश्राः

लग्नं चतुर्थं दशमं सप्तमं केन्द्रमुच्यते ।
पञ्चमं नवमं चैव त्रिकोणमभिधीयते ।। ६०७ ।।

चतुर्थमष्टमं चैव चतुरश्रं प्रकीर्तितम् ।। ६०८ ।।

### ग्रहशत्रुमित्रभावः

शत्रू मन्दसितौ समः शशिसुतो मित्राणि शेषा रवेः
तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूग्रकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ।। ६०९ ।।

सूरेः सौम्यसितावरी रविसुतो मध्यः परेत्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः मन्दस्य चान्येऽरयः
ये प्रोक्ताः सुहृदः त्रिकोणभवना तेऽमी मया कीर्तिताः ।।

अन्योन्यस्य धनव्ययाय सहज व्यापार बन्धुस्थिताः ।
तत्काले सुहृदः स्वतुङ्गभवनेऽप्येकेऽरयस्त्वन्यथा ।। ६११ ।।

हितसमरिपुसंज्ञा ये निसर्गान्निरुक्ता
हिततमहितमध्यास्तेऽपि तत्काल मित्राः ।
रिपुसम सुहृदाख्या जन्मकाले ग्रहेन्द्राः
अतिरिपु रिपुमध्याः शत्रुभिश्चिन्तनीयाः ।। ६१२ ।।

**नरचक्रम्**

रविनक्षत्रमारभ्य जातर्क्षान्तं च गण्यते ।
नराकारं लिखित्वा तु त्रीणि ऋक्षाणि मस्तके ।। ६१३ ।।

वदने त्रीणि ऋक्षाणि एकैकं स्कन्धयोरपि ।
एकैकं बाहुमूले तु एकैकं तु द्विहस्तयोः ।। ६१४ ।।

उदरे पञ्च ऋक्षाणि नाभ्यामेकं तु निक्षिपेत् ।
एकं गुह्यप्रदेशे तु एकैकं तु द्विजानुनि ।।
पादयोश्च तथा षट्कं नरचक्रं प्रकीर्तितम् ।। ६१५ ।।

**अस्य फलम्**

कल्पायुर्जायते पादौ स्थानभ्रष्टं च जानुनि ।
परदारमथो गुह्ये नाभ्याल्पसुखं भवेत् ।। ६१६ ।।

शूरत्वं बाहुमूले च श्रीस्तथा स्कन्धयोर्द्वयोः ।
आनने पण्डितं विद्यात् पट्टबन्धं शिरो रवेः ।। ६१७ ।।

**गजकेसरी (योगः)**

किं कुर्वन्ति ग्रहाः सर्वे चन्द्रकेन्द्रे बृहस्पतौ ।
मत्तमातङ्गयूथानां हरत्येकोऽपि केसरी ।। ६१८ ।।

**नरपतियोगः**

यदि पश्यति दानवार्चितं
वचसामधिपस्तदा भवेन्नृपतिः ।
स भवेद्‌बहुनायकोऽथवा
भुजगेन्द्रेश इव प्रतापवान् ।। ६१९ ।।

**राजाधिराजयोगः**

मृगपतिवृषकन्या कर्कटस्थे च राहौ
भवति विपुललक्ष्म्या राजराजाधिपो वा ।
हयगजनरनौकामेदिनी मण्डलेन्द्रो
रिपुगणविनिहन्ता राजयोगे प्रशस्तः ।। ६२० ।।

**राहोरुच्चस्थानम्**

अजवृषभकर्किलग्ने
रक्षति राहुः समस्तपीडाभ्यः ।। ६२१ ।।

**मङ्‌गलयोगः**

चन्द्रात्केन्द्रगते भौमे योगो मङ्‌गलकारकः ।
मङ्‌गलाढ्यो नरः श्रीमान् नित्यश्रीर्नित्यमङ्‌गलम् ।। ६२२

**चन्द्रमङ्‌गलयोगः**

चन्द्रमङ्‌गलयोगो हि यस्य जन्मनि जायते ।
न विमुञ्चति तं लक्ष्मीर्लज्जां कुलवधूरिव ।। ६२३ ।।

**अमलयोगः**

यस्य जन्मसमये शशिलग्नात्
सद्ग्रहो भवति कर्मणि स्थितः ।
तस्य कीर्तिरमला भुवि तिष्ठेत्
आयुषोऽन्तमविनाशितसम्पत् ।। ६२४ ।

**चक्रवर्तियोगः**

नीचस्थिते जन्मनि यो ग्रहः स्यात्
तद्राशिनाथोऽपि तदुच्चनाथः ।
स चन्द्रलग्नाद्यदि केन्द्रवर्ती
राजा भवेत् धार्मिकचक्रवर्ती ।। ६२५ ।।

**अनफा सुनफा दुरुधरायोगाः**

चन्द्राद् व्ययगैरनफा
तद्धनगैः सूर्यवर्जितैः सुनफा ।
उभयोर्दुरुधराख्यो
दीर्घायुर्योगजातस्य ।। ६२६ ।।

**वासिवेसि उभयचरी योगः**

सूर्याद् व्यर्यगैर्वासी
तद्धनगैश्चन्द्रवर्जितैर्वेसी ।
उभयोः संयोगे स्यात्
उभयचरी नाम योगोऽयम् ।। ६२७ ।।

अस्मिन् जातो महायोगे पुत्रार्थायुष्यवृद्धिमान् ।

केन्द्रत्रिकोणे बुधजीवशुक्रै-
युक्तेऽथवा वीक्षितजन्मकाले ।
धर्मार्थयुक्ताः सुकृती च विद्वान्
पुत्रः शतं जीवति वत्सराणाम् ।। ६२८ ।।

**सूर्यद्यंशकफलम्**

दीर्घप्रतापतनुकेशविशालनेत्रः
पित्तातिकायगजभोगविशालबुद्धिः ।
अन्योषितः कृतनिजात्मजदाररक्षः
सद्यो ददाति गुणवान् रविरंशकेन ।। ६२९ ।।

मध्यस्थगात्रमृदुभाषणनीतिमार्गः
कान्ताहितः कुशलवान् पटुशेमुषीकः
सद्योघृतं च रसभोजनशोभनानि
मातुःप्रियः परहितः शशिनोऽम्शकेन ।। ६३० ।।

क्रूरः कृतघ्नतनुमूर्तिरुदारगुण्यः
आत्मीय कीर्तनपरोऽगुणवांश्च सौम्यः ।
क्षुद्रैश्च तस्कर गणैरधिकैरुपेतः
बन्धुत्यजस्सशपथः महिजांशकेन ।। ६३१ ।।

श्यामः कृशाङ्गमधुवाग्घृणिचारुहासो
बन्धुप्रियः परजनेषु हितः प्रबुद्धः ।

सद्यः प्रताप निपुणः परदारसक्तः
बोधाय बोधगुणवान् शशिसूनुरंशे ।। ६३२ ।।

प्राज्ञो विशालतनु दीर्घमहागुणाढ्यः
सन्मार्गपुण्यकुशल प्रतिपालकश्च ।
ज्ञानी कला निपुणसत्यवचाः प्रकाशी
क्रीडाप्रपञ्चकवितागुरुरंशकेन ।। ६३३ ।।

सद्यो ददाति सकलं च विनोदमार्ग-
दानप्रियः सुखकरः सखिबन्धुभृत्ये ।
श्रीमान् विचक्षणमतिः स्मृतिकाव्यसक्तः
स्त्रीसङ्गसक्तपिशुनो भृगुरंशकेन ।। ६३४ ।।

निर्लज्जवाणिपिशुनः कृपणो दरिद्रः
निद्राधिकः सतत वक्रमतिर्दुरात्मा।
स्थूलास्थिकेशनखदन्त विकारभावः
सत्यैकधर्मरहितो रविसूनुरंशे ।। ६३५ ।।

## गोचारफलम्

अतःपरं प्रवक्ष्यमामि गोचरेषु फलाफलम् ।

## सूर्यचारफलम्

स्थानहानिं धनं लक्ष्मीं मानहानिं मनोरुजम् ।। ६३६

शत्रुनाशमथो यात्रां पीडां द्वेषं क्रियाफलम् ।
वित्तलाभं धनच्छेदं कुर्याद्दिनकरः क्रमात् ।। ६३७

**चन्द्रचारफलम्**

मृष्टान्नं वित्तलाभं च द्रव्याप्तिं कुक्षिरोगिताम् ।
कार्यहानिं धनप्राप्तिं योषिल्लाभं मृतिस्मृतिम् ।। ६३८ ।।

सौख्यं धनार्थनाशं च क्रमेण कुरुते शशी ।। ६३९ ।।

**अङ्गारकफलम्**

शत्रुपीडां धनच्छेदं धनलाभं रिपोर्भयम् ।
अर्थनाशं धनं शोकं मृतिं देहरुजं शुचिम् ।। ६४० ।।

भूलाभं व्याध्यनर्थं च क्रमशः कुरुते कुजः ।। ६४१ ।।

**बुधचारफलम्**

बन्धनं द्रविणं लक्ष्मीं बुद्धिसौख्यं स्थितिं रुजम् ।
वित्तं व्याधिं सुखं लाभं व्ययं कुर्याद् बुधः क्रमात् ।। ६४२

**गुरुचारफलम्**

भयं पूजां रुजं द्रव्यहानिं सौख्यं शुचं श्रियम् ।
हानिं धनं स्थाननाशं लाभं पीडां गुरुः क्रमात् ।। ६४३ ।।

**शुक्रचारफलम्**

हर्षमर्थं सुखं तुष्टिं शत्रुभयं शुभम् ।
द्रव्यं वस्त्रं रुजं चैव लाभवित्तं भृगुः क्रमात् ।। ६४५ ।।

**शनिचारफलम्**

विपत्तिं हानिसम्पत्तिं कुक्षिरोगं सुतक्षयम् ।
लक्ष्मीकरं महादैन्यं मरणं देहशोषणम् ।। ६४५ ।।

पीडनं लाभनष्टं च क्रमेण कुरुते शनिः ।। ६४६ ।।

**राहुकेतुचारफलम्**

भयं राजसुखं नाशं हानिं सौख्यं नृपाद्भयम् ।
आरोग्यतापकलहं वित्तनाशं फणिद्वयम् ।। ६४७ ।।

द्वादशाष्टमजन्मस्थाः शन्यर्काङ्गारको गुरुः ।
कुर्वन्ति प्राणसन्देहं स्थानभ्रष्टं धनक्षयम् ।। ६४८ ।।

अतिचारे च वक्रे च तत्तद्राशिगतं फलम् ।
बृहस्पतेस्तु तन्नास्ति पूर्वराशिगतं फलम् ।। ६४९ ।।

**मासफलम्**

जन्मनक्षत्रमारभ्य सङ्क्रान्त्या ऋक्षसंयुतम् ।
सप्तभिर्गुणितं कृत्वा अष्टभिर्भागमाहरेत् ।। ६५० ।।

रोगो लाभः तथाऽध्वानं बन्धनं धनमेव च ।
ऐश्वर्यमर्थहानिश्चाप्यपमृत्युश्च जायते ।। ६५१ ।।

### नित्यग्रहफलम्

जन्मताराचतुर्गुण्यं तिथिवारेण संयुतम् ।
ग्रहसङ्ख्याऽऽहृतेः शेषं नित्यग्रहफलं भवेत् ।। ६५२ ।।

तापं कान्तिर्मृतिः लाभः सौख्यं स्खलनमेव च ।
मरणं च पुनस्तापो नित्यग्रहफलं भवेत् ।। ६५३ ।।

### वारजन्मनक्षत्रयोगफलम्

अध्वा भोजनमालस्यं विद्या वस्त्रं वराङ्गना ।
अतिपीडां च कुरुते सूर्यवारादिषु क्रमात् ।। ६५४ ।।

### गोचरेषु ग्रहाणां बलाबलम् (वेधाप्रयुक्तम्)

### सूर्यस्य

लाभविक्रमखशत्रुषु स्थितः
शोभनो निगदितो दिवाकरः ।
खेचरैः सुततपो जलान्त्यगैः
व्यर्किभिर्यदि न विद्यते यदा ।। ६५५ ।।

### चन्द्रस्य

जूकजन्मरिपुलाभगस्त्रिकः
चन्द्रमाः शुभफलप्रदः सदा ।

स्वात्मजान्त्यमृति बन्धुधर्मगैः
    विध्यमान विबुधैर्यदि ग्रहैः ।। ६५६ ।।

**भौमस्य**

विक्रमायरिपुयुगः कुजः शुभः
    स्यात्तदान्त्य सुतधर्मगैः खगैः ।
चैन्नविद्ध इनसूनुरप्यसौ
    किन्तु धर्मघृणिना न विद्यते ।। ६५७ ।।

**बुधस्य**

स्वाम्बुशत्रुमृतिखायगः शुभः
    ज्ञस्तदा न खलु विध्यते यदा ।
आत्मजत्रितप आद्यनैधने
    प्रान्तगैर्विविधुभिर्न विद्यते ।। ६५८ ।।

**गुरोः**

स्वायधर्मतनयास्तसंस्थितो
    नाकनायकपुरोहितः शुभः ।
रिप्फरन्ध्रखजलत्रिगैर्यदा
    विद्यते गगनचारिभिर्नहि ।। ६५९ ।।

**शुक्रस्य**

स्यात्सुताष्टमतपोव्ययान्त्यगो
    दानवेन्द्रकुलदेशिकः शुभः ।

नैधनान्त्यतनु कर्मधर्मधी-
लाभवैरिसहजस्थ खेचरैः ।। ६६० ।।

कुजवद्राहुरविकेतूनां फलमादिशेत् ।। ६६१ ।।

वह्निर्विशाखा यममैत्रयोश्च
विष्णुर्मघावासव सार्पयोश्च ।
दस्त्रार्यभे पौष्णभगे च विद्धं
तथोत्तराभाद्रभहस्तविद्धम् ।। ६६२ ।।

चित्राजपादावरुणानिलर्क्षे
शक्रेज्यमूलादिति वारुणार्द्रे ।
विश्वैन्दतीरोहिणि साभिजात्यं
विद्धं शलाका इति पञ्चकं च ।। ६६३ ।।

**नक्षत्रनिघण्टुः**

भवत्यश्विनिनक्षत्रं अश्वीदस्त्रस्तुरङ्गमः ।
आद्यस्तुरङ्गस्तुरगः अश्वो वाजीहयो हरिः ।। ६६४ ।।

भरणीस्याद्यमो यमाम्यस्त्वन्तको यमसंज्ञकः ।
कृत्तिका बहुला ज्ञेया हुतभुग् वह्निसंज्ञकः ।। ६६५ ।।

षट्तारको पावकश्चाप्यनलो ज्वलनस्तथा ।
रोहिणी च विधिर्ब्रह्मा प्राजापत्यश्चतुर्मुखम् ।। ६६६ ।।

प्रजापतिः प्रजेशश्च विधाता पङ्कजासनः ।
आत्मभूः पद्मयोनिः स्यात् ब्रह्मनाम ततःपरम् ।। ६६७ ।।

मृगशीर्षो भृगश्चन्द्रः ऐन्दवो हिमदीधितिः ।
स्याच्चन्द्रशिशुभं सौम्यो निशानथो निशाकरः ।। ६६८ ।।

आर्द्रारौद्रे च पुरजित् शर्वःस्थाणुर्भवो हरः ।
पुनर्वस्वादितिर्देवमाता आदित्यमेव च ।। ६६९ ।।

इज्याद्यौ तिष्यपुष्ये च पूजितो गुरुनामकः ।
वागीशश्चामरेज्यश्च जीवो देवपुरोहितः ।। ६७० ।.

आश्लेषोरगसर्पाहि भुजङ्गव्यालसंज्ञकः ।
मघा पिता च पैत्र्यं च मेखला पितृभं तथा ।। ६७१ ।।

भाग्यं पूर्वाफाल्गुनी च भगाख्यं भगसंज्ञकम् ।
आर्यमर्यमणं चैव अर्यम्णं चोत्तरं तथा ।। ६७२ ।।

हस्तः सवितृसावित्र अर्कः सूर्यो दिवाकरः ।
चित्रः स्यात् त्वाष्ट्रदैवत्यं त्वाष्ट्रैन्द्रं सुरवर्धकम् ।। ६७३ ।।

स्वातीसमीरणो वायुः पवनश्चानिलो मरुत् ।
विशाखं शूर्पमिन्द्राग्निं द्विदैवत्यं विशाखभम् ।। ६७४ ।।

मित्रं मैत्र मनूराधमनूराधस्य संज्ञकम् ।
ज्येष्ठैन्द्रं पुरुहूतश्च इन्द्रःशतमखस्तथा ।। ६७५ ।।

मूलं निशाचरं प्रोक्तं आसुरं निरऋतिस्तथा ।
नक्तञ्चरं कोणपं च राक्षसं पिशिताशनम् ।। ६७६ ।।

पूर्वाषाढा जलं तोयं उदकं चाप्यमेव च ।
उत्तराषाढविश्वं च अभिजिद्वा प्रकाशकम् ।। ६७७ ।।

श्रवणं वैष्णवं श्रीशं श्रीकान्तं मुरजिद्धारेम् ।
श्रविष्ठा च झनिष्ठाच वसुर्वासव एव च ।। ६७८ ।।

प्राचेतसो जलनिधिः शततारश्च वारुणः ।
अजैकपात् प्रोष्ठपदा पूर्वाभाद्रपदा तथा ।। ६७९ ।।

उत्तरप्रोष्ठपाच्चैव अहिर्बुध्न्य निशामुखम् ।
रेवती पौष्ण्य इत्याहुरन्त्यः पूषा तथैव च ।। ६८० ।।

**राशिनिघण्टुः**

अजा क्रिया छागवस्ता तूबरा विश्वभेषजी ।
मेषमाद्या क्रियाबस्ता छागी रागी रयस्तथा ।। ६८१ ।।

वृषभस्तु उरुगौश्च वृष उक्षा तथैव च ।
अनड्वान् सौरभेयश्च दूरक्षोऽभिवृषाह्वयः ।। ६८२ ।।

मिथुनं यमलं युग्मं नृयुग्मं च युगं तथा ।
कुलीरः कर्किकटकः कर्किणी निचलीझमान् ।। ६८३ ।।

सिह्मो मृगारिर्मृगराट् मृगेन्द्रो मृगनायकः ।
अङ्गना स्त्री वधूकन्या पार्षेयं कन्यकाऽबला ।। ६८४ ।।

तुलातौलि वणिग्जूकः तुलाभृत् घटसंज्ञकः ।
अलिः सरीसृपः कोर्पि कीटो वृश्चिकवाचकः ।। ६८५ ।।

शाङ्र्गं शरासनं प्रोक्तं तौलिकं मार्गणासनम् ।
चापं तूणीर बाणं च धनुः कोदण्ड कार्मुकम् ।। ६८६ ।।

मकरः स्यान्मृगो नक्रश्चाकोकेकश्च कथ्यते ।
कुम्भो घटो जलधरो हृद्रोग इति कीर्तितः ।। ६८७ ।।

मीनान्त्यो निमिषोमत्स्यो झषश्चवारिजोऽण्डजः ।
जलजो पृथुरोमा च मीनसंज्ञाः प्रकीर्तिताः ।। ६८८ ।।



ஸ்ரீ குருப்யோ நம:
ஸ்ரீ மஹாகணபதயே நம:

# காலவிதான பத்ததி

## (தமிழ் மொழிபெயர்ப்பு)

சுக்லாம்பரதரம் விஷ்ணும் சசிவர்ணம் சதுர்புஜம் l
ப்ரஸன்னவதனம் த்யாயேத் ஸர்வவிக்னோபசாந்தயே ll

யஸ்ய த்விரதவக்த்ராத்யா: பாரிஷத்யா: பரஸ்சதம் l
விக்னம் நிக்னந்தி ஸததம் விஷ்வக்ஸேனம் தமாச்ரயே ll

வெண்ணிற ஆடை அணிந்தவரும், அங்கிங்கென்றில்லாதபடி எங்கும் வியாபித்துள்ளவரும், நான்கு கைகளையுடைவருமான மதயானை முகம் கொண்ட ஸ்ரீவிநாயகரை எல்லாவித இடையூறுகளும் விலகுவதற்காகத் தியானிக்கவேண்டும்.

இரு தந்தங்களையுடைய யானை முகம் கொண்டோர் போன்ற நூற்றுக்கும் அதிகமான யாருடைய கணங்கள் (ப்ரமதகணங்கள்) இடைவிடாமல் ஜீவர்களின் எண்ணற்ற இடையூறுகளை விலக்குகிறார்களோ அந்த விஷ்வக்ஸேனரை ஆச்ரயிக்கிறேன் (வணங்குகிறேன்).

ஸ்ரீமஹாலக்ஷ்மியின் கையிலுள்ள மோதிரத்தின் ரத்னக் கற்களின் ஒளியால் சிவந்த நிறமுடையதாகச் செய்யப்பட்டதாயும் நல்லோர்களால் வழிபடத்தக்கதும், வணங்கும் தேவர்களின் தலைகளுக்கு அணிகலனாகச் செய்யப்பட்டதுமாகிய ஸ்ரீதிருமாலின் திருவடித் தாமரைகள் உங்களுக்கு ஸர்வமங்களத்தையும் அளிக்கட்டும்.

---

Ms. No. B. 11030 / D. 11351 and B. 11028 / D. 11352
T. M. S. S.S. M. Library, Thanjavur.

கால வடிவாயும், இரண்டற்றவராயும், எக்குறையும் இல்லாதவராயும், சந்திரனை அணிகலனாகக் கொண்டவராயும் உள்ள பார்வதீதேவியின் நாயகராகிய சிவபெருமனை வணங்கிவிட்டு, சோதிட சாஸ்திரத்தில் வல்லுனர்களாக உள்ள அறிஞர்களின் புகழ் வளர்ச்சிக்காக நான் (நூலாசிரியர் பெயர் தரப்படவில்லை) **"காலவிதான பத்ததி"** எனும் நூலை அமைக்கிறேன். பல சோதிட நூல்களில் கூறப்பட்ட கருத்துக்களைக் கொண்டு அமைக்கப்பட்ட இந்நூல் ஒரு தொகுப்பு நூலாகக் கருதப்படுகிறது. இந்நூலாசிரியர் யார் என்று இந்நூலில் எவ்விடத்திலும் கூறப்படவில்லையாதலின் இந்நூலாசிரியர் பற்றி அறிய இயலவில்லை.

தன் குலம், தன் வரையில் வளர்ந்து வந்ததுபோல், தனக்குப் பிறகும் தொடர்ந்து வளரவேண்டும் என்று விரும்பாதவர் இல்லையெனலாம். திருமணங்களின் முக்ய நோக்கமே தர்மப்ரஜை ஏற்படவேண்டும் என்பதேயாகும். தம் மனையாளிடம் ஆரோக்யமான ஸந்ததி ஏற்பட்டால்தான் திருமண வாழ்க்கையும் இல்லற வாழ்க்கையும் சிறப்படையும்.

இவ்விஷயத்தில் முன்னோர்களால் சில கட்டுப்பாடுகள் விதிக்கப்பட்டுள்ளன. அவற்றைப் பலரும் அறிவதுமில்லை. அறிவிக்கும் நூல்கள் இருந்தும் பலரும் அறிந்துகொள்ளும் விதத்தில் வெளியிடுவதுமில்லை. உரிய காலத்தில் மேற்கொள்ளப்படும் முயற்சிகள்தான் சிறந்த பயன்தரும். சித்திரை மாதத்தில் பயிர்த்தொழில் மேற்கொள்ளப்பட்டால் விவசாயம் பயன் தருவதில்லையல்லவா? அதுபோல் குறிப்பிட்ட நாட்களில் குறிப்பிட்ட நக்ஷத்திரங்கள் உள்ள இரவுக் காலங்களில்தான் தம் மனையாளுடன் மகிழ்ச்சியுடன் இருக்கவேண்டும் என்றும், அவ்வாறு கட்டுப்பாட்டுடன் இருப்பதால் ஆரோக்கியம், நல்லொழுக்கம், அறிவாற்றல் உள்ள சந்ததி ஏற்படும் என்றும் முன்னோர்கள் கூறியுள்ளனர்.

